ணீ ஸம்ஹார ஸம்ஹார ஸர்வ ரோகாந்:
ஶோஷய ஶோஷய ஸர்வ விஷாநுத்ரிய
த்ரிணி ஸர்வ ஜ்வராணி ச்சேதய
ச்சேதய ஸர்வ ஶத்ரூந் உச்சாடய
உச்சாடய ஸர்வ ஸிம்ஹாரக்ஷ
ஸ ஸர்வ கார்யாணி ஸாதய ஸாதய
ய ஹ்ராம் ஹ்ரீம் ஹ்ரூம் ஹ்ரைம் ஹ்ரௌம்
ஹ்ர: ஹ்ரண வதயே ஹும் பட் ஸ்வாஹா
॥ ஶ்ரீ நரோஹரவத்ரேணோபாய ॥

# ॥ अथ गणपत्यथर्वशीर्षप्रारंभः ॥



मूल्य २० पैसे.

निर्णयसागर बुक प्रकाशन मुंबई २

गण. श्रीगणेशाय नमः ॥ ॥ ॐ भद्रं कर्णेभिः० ॥ १ ॥ अथ.
॥ १ ॥ स्वस्ति न इंद्रो० ॥ १ ॥ अथ गणेशाथर्वशीर्षं
व्याख्यास्यामः ॥ ॐ नमस्ते गणपतये ॥ त्वमेव
प्रत्यक्षं तत्त्वमसि ॥ त्वमेव केवलं कर्तासि ॥
त्वमेव केवलं धर्तासि ॥ त्वमेव केवलं हर्तासि ॥
त्वमेव सर्वं खल्विदं ब्रह्मासि ॥ त्वं साक्षादात्मासि
नित्यं ॥ १ ॥ ऋतं वच्मि ॥ सत्यं वच्मि ॥ २ ॥
अव त्वं मां ॥ अव वक्तारं ॥ अव श्रोतारं ॥ अव
दातारं ॥ अव धातारं ॥ अवानूचानमव शिष्यं ॥ ॥ १ ॥
अव पश्चात्तात् ॥ अव पुरस्तात् ॥ अवोत्तरात्तात् ॥
अव दक्षिणात्तात् ॥ अव चोर्ध्वात्तात् ॥ अवाधरा-

त्तात् ॥ सर्वतो मां पाहि पाहि समंतात् ॥ ३ ॥ त्वं
वाङ्मयस्त्वं चिन्मयः ॥ त्वमानंदमयस्त्वं ब्रह्ममयः ।
त्वं सच्चिदानंदाद्वितीयोसि ॥ त्वं प्रत्यक्षं ब्रह्मासि ॥
त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ ४ ॥ सर्वं जगदिदं
त्वत्तो जायते ॥ सर्वं जगदिदं त्वत्तस्तिष्ठति ॥ सर्वं
जगदिदं त्वयि लयमेष्यति ॥ सर्वं जगदिदं त्वयि
प्रत्येति ॥ त्वं भूमिरापोनलोनिऽलो नभः ॥ त्वं
चत्वारि वाक्पदानि ॥ ५ ॥ त्वं गुणत्रयातीतः ॥ त्वं
देहत्रयातीतः ॥ त्वं कालत्रयातीतः ॥ त्वं मूलाधार-
स्थितोऽसि नित्यं ॥ त्वं शक्तित्रयात्मकः ॥ त्वां योगिनो
ध्यायन्ति नित्यं ॥ त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्व-

मिंद्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म-
भूर्भुवःस्वरोम् ॥ ६ ॥ गणादिं पूर्वमुच्चार्य वर्णादिं
तदनंतरम् ॥ अनुस्वारः परतरः ॥ अर्धेंदुलसितं ॥
तारेण रुद्धं ॥ एतत्तव मनुस्वरूपं ॥ गकारः पूर्व-
रूपं ॥ अकारो मध्यमरूपं ॥ अनुस्वारश्चांत्यरूपं ॥
बिंदुरुत्तररूपं ॥ नादः संधानं ॥ सꣳहिता संधिः ॥
सैषा गणेशविद्या ॥ गणक ऋषिः ॥ निचृद्गायत्री
छंदः ॥ गणपतिर्देवता ॥ ॐ गं गणपतये नमः ॥ ७ ॥
एकदंताय विद्महे वक्रतुंडाय धीमहि ॥ तन्नो दंती
प्रचोदयात् ॥ ८ ॥ एकदंतं चतुर्हस्तं पाशमंकुश-
धारिणम् ॥ रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥

रक्तं लंबोदरं शूर्पकर्णकं रक्तवाससम् ॥ रक्तगंधानु-
लिप्तांगं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकंपिनं देवं
जगत्कारणमच्युतम् ॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः
पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगि-
नांवरः ॥ ९ ॥ नमो व्रातपतये नमो गणपतये नमः
प्रमथपतये नमस्ते अस्तु लंबोदरायैकदंताय विघ्न-
नाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥ १० ॥
एतदथर्वशीर्षं योऽधीते ॥ स ब्रह्मभूयाय कल्पते ॥
स सर्वतः सुखमेधते ॥ स सर्वविघ्नैर्न बाध्यते ॥
स पंचमहापापात्प्रमुच्यते ॥ सायमधीयानो दिवसकृतं
पापं नाशयति ॥ प्रातरधीयानो रात्रिकृतं पापं नाश-

यति ॥ सायंप्रातः प्रयुंजानोऽपापो भवति ॥ सर्व-
त्राधीयानोऽपविघ्नो भवति ॥ धर्मार्थकाममोक्षं च
विंदति ॥ इदमथर्वशीर्षमशिष्याय न देयं ॥ यो यदि
मोहाद्दास्यति ॥ स पापीयान् भवति ॥ सहस्रावर्त-
नात् ॥ यं यं काममधीते ॥ तं तमनेन साधयेत् ॥११॥
अनेन गणपतिमभिषिंचति ॥ स वाग्मी भवति ॥
चतुर्थ्यामनश्नन् जपति ॥ स विद्यावान्भवति ॥
इत्यथर्वणवाक्यं ॥ ब्रह्माद्याचरणं विद्यात् ॥ न बिभेति
कदाचनेति ॥ १२ ॥ यो दूर्वांकुरैर्यजति ॥ स वैश्रवणो-
पमो भवति ॥ यो लाजैर्यजति स यशोवान्भवति ॥
स मेधावान्भवति ॥ यो मोदकसहस्रेण यजति स

वांछितफलमवाप्नोति ॥ यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते ॥ अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा ॥ सूर्यवर्चस्वी भवति ॥ सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा सिद्धमंत्रो भवति ॥ महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते ॥ महापापात्प्रमुच्यते ॥ स सर्वविद्भवति स सर्वविद्भवति ॥ य एवं वेद ॥ इत्युपनिषत् ॥ १३ ॥ स ह नाववतु ॥ स ह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ भद्रं कर्णेभिः० ॥ १ ॥ स्वस्ति न इंद्रो० ॥ १ ॥ ॐशांतिः शांतिः शांतिः ॥

इति गणपत्यथर्वशीर्षं समाप्तम् ॥

॥ इति गणपत्यथर्वशीर्षं समाप्तम् ॥

शकाब्दाः १८८८ सनाब्दाः १९६६

— मुद्रक - प्रकाशक —

लक्ष्मीबाई नारायण चौधरी,

निर्णयसागर प्रेस, २६-२८ डॉ. एम्. बी. वेलकर स्ट्रीट, मुंबई २.

